# श्री अरुणाचलपञ्चरत्नानुवादश्लोकाः ॥

(पञ्चचामरम्)

कृपासुधाम्बुधेऽरुणाचलप्रबोधभास्कर
स्वचित्स्वरूपतेजसा निगीर्णसर्वलोकक ।
हृदम्बुजातकोशक प्रफुल्लता विधायिनीं
प्रभां निजां प्रसार्य भो तमो विनाशयान्तरम् ॥ १ ॥

उदेति वर्तते प्रलीयतेऽखिलं जगच्चलं
त्वयि प्रकाशवत्पटे यथैव चित्रसन्ततिः ।
अहंतयात्मरूपतोऽपि नृत्यसि स्वयं हृदि
वदन्त्यतो हृदाख्यकं भवन्तमेककं परम् ॥ २ ॥

उदेत्यहं कुतस्स एष इत्यतीव शुद्धया
धिया हृदि प्रविष्टया विमृग्य तत्त्वमात्मनः ।
अवैति चेच्चिदात्मकं भवन्तमात्मरूपतो
नदीव सङ्गतांम्बुधिं त्वयि प्रशान्तिमेति धीः ॥ ३ ॥

विहाय बाह्यवस्तु वायुरोधनान्मनो हठा-
न्निरुध्य योगगस्स्मरन् भवन्तमेव सर्वदा ।
महिम्नि लीनधीः प्रभे क्षणेन मोदते भृशं
अथोत्थितस्स वासनेन चेतसा तु संसरेत् ॥ ४ ॥

त्वदर्पितेन चेतसाऽनुरक्तमानसस्त्वयि
त्वदाकृतित्वतोऽखिलं जगत्समीक्ष्य सर्वदा ।
अनन्य भक्तियोगतो भजन्सुखाम्बुधौ त्वयि
निमग्नधीर्जयत्यसौ स उत्तमो हि योगिषु ॥ ५ ॥

इति ॥ लक्ष्मणशर्मा ॥ अनुवादकः